अभिधावृत्ति मातृका

No. 63
1873-74

No 63 of 1873-74 in the Govt-MSS library at the B.O.R. Institute, Poona 4.

॥ श्रीहरिः॥

Fol. 1b

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ॥१॥
तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः।
शुद्धोपचारमिश्रत्वाल्लक्षणा द्विविधा मता ॥२॥
उपादानाल्लक्षणाच्च शुद्धा सा द्विविधोदिता।
स्वासिद्ध्यर्थतया क्षेपो यत्र वस्त्वंतरस्य तत् ॥
उपादानं लक्षणं तु तद्विपर्ययतो मतं।
आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः ॥४॥
प्रत्येकं विद्यमानत्वादुपचारश्चतुर्विधः।
तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे ॥
निगीर्णे व्यवसानं तु रूढ्यासन्नतरत्वतः।
वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात् ॥
लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः।
आ-यभिहितानां सा वाच्यत्वादूर्ध्वमिष्यते ॥७॥
आन्वितानां तु वाच्यत्वे वाच्यत्वस्य पुरःस्थिता।
द्वये द्वयमखण्डं तु वाक्यार्थे परमार्थतः ॥८॥
नास्त्यसौ कल्पितेर्थे तु पूर्ववत्प्रविभज्यते
मुख्यार्थासंभवात्सेयं मुख्यार्थासत्ति हेतुका ॥९॥
रूढेः प्रयोजनाद्वापि व्यवहारे विलोक्यते।

Fol. 2a

सादृश्ये वैपरीत्ये च वाच्यस्याति तिरस्क्रिया ॥१०॥
विवक्षा चाविवक्षा च संबंधसमवाययोः।
उपादाने विवक्षात्र लक्षणे त्वविलक्षणम् ॥११॥
तिरस्क्रिया क्रियायोगे क्वाचित्तद्विपरीतता।
विवर्तमानं वाक्तत्त्वं दशधेवं विलोक्यते ॥१२॥
संहृतक्रमभेदे तु तस्मिंस्तेषां कुतो गतिः।
इत्येतदभिधावृत्तं दशधात्र निवेचितम् ॥१३॥

Fol. 2b. पदवाक्यप्रमाणेषु तदेतत्प्रतिबिंबितं ।।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ।।१४।।
भट्ट कल्लटपुत्रेण मुकुलेन निरूपिता ।
सूरिप्रबोधनायेयमभिधावृत्तिमातृका ।।१५।।

इह भोगापवर्गसाधनभूतानां तद्विपर्ययपरिवर्जन
प्रयोजनानां च पदार्थानां निश्चयमन्तरेण व्यवहारोपरोहि
ता नोपपद्यते। तथा हि सर्वाणि प्रमाणानि प्रमेयावगति
निबन्धनभूतानि निश्चयपर्यवसायितया प्रमाणं य भज
न्ते। प्रमाण निबन्धनभोगापवर्गसाधनभूतानां तद्विपर्यय
परिवर्जनप्रयोजनानां च पदार्थानामवगतिं अतो निश्चय
एव तेषां पदार्थानां व्यवहारोपरोह निबन्धन निश्चयश्च
Fol. 3 शब्दसंभेदेनार्थं गोचरीकरोति। शब्दस्य च मुख्येन
लाक्षणिकेन चाभिधाव्यापारेणार्थावगतिहेतुत्वमिति ?
मुख्य लाक्षणिकयोरभिधाव्यापारयोरत्र विवेकः क्रियते
कः पुनर्मुख्यो लाक्षणिको वाभिधाव्यापार इत्याशङ्क्य
विषयोपदर्शनद्वारेण मुख्यलाक्षणिकौ शब्दव्यापारावुपव
र्णयितुमाह

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ।।

शब्दव्यापाराद्यस्यावगतिस्तस्य मुख्यत्वं स हि
यथा सर्वेभ्यो हस्तादिभ्यो वयवेभ्यः पूर्वं मुखमव
? लोक्यते तद्वदेव सर्वेभ्यः प्रतीयमानेभ्योऽर्थान्तरेभ्यः
पूर्वमवगम्यते ।। तस्मान्मुखमिव मुख्य इति। शाखादि यदा
त्र न मुख्यशब्देनाभिधीयते ।। तस्योदाहरणं ।। गौरनुबन्ध्य
इति ।। अत्र हि गोशब्दव्यापाराद्यागसाधनभूता गोत्वल
क्षणा जातिरवगम्यते। अतस्तस्या मुख्यता ।। तदेवं शब्द
व्यापारगम्यो मुख्योऽर्थः ।। यस्य तु शब्दव्यापारावगम्यार्थ
पर्यालोचनयावगतिस्तस्य लाक्षणिकत्वं यथा पूर्वत्रैवोदा-

Fol. 4 हरणे व्यक्तेः सा हि न शब्दव्यापारादवसीयते
"विशेष्यं नाभिगच्छेत क्षीणशक्तिर्विशेषणे" इति न्यायाच्छ
ब्दस्य जातिमात्रस्य पर्यवसितत्वात्॥ जातिस्तु व्यक्तिमन्तरेण
योगसाधनभावं न प्रतिपद्यते इति॥ शब्दप्रत्यायितजाति-
सामर्थ्यादत्र जातेराश्रयभूता व्यक्तिराक्षिप्यते॥ तेनासौ
लाक्षणिकी। एवमयं मुख्यलाक्षणिकात्मविषयोपवर्णनद्वारेण
शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरंतरार्थ
विषयसांतरार्थनिष्ठश्च। संप्रति तु मुख्यस्य चातुर्विध्यमभि
धीयते।

तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः॥

तयोर्मुख्यलाक्षणिकयोरर्थयोर्मध्यान्मुख्यस्यार्थस्य चत्वारो
भेदाः॥ जात्यादिभेदात्। चतुष्टयी हि शब्दानां प्रवृत्तिर्भगवता
महाभाष्यकारेणोपवर्णिता जातिशब्दा गुणशब्दाः क्रियाशब्दा
यदृच्छाशब्दाश्चेति॥ तथा हि सर्वेषां शब्दानां स्वार्थाभिधानाय
Fol. 5 प्रवर्तमानानामुपाधिदर्शितविषयविवेकत्वादुपाधिनिबन्धना
प्रवृत्तिः॥ उपाधिश्च द्विविधः वक्तृसन्निवेशितो वस्तुधर्मश्च कश्चि
वक्त्रा तस्मिंस्तस्मिन्वस्तुन्युपाधितया सन्निवेश्यते कश्चित्तु
वस्तुधर्म एव। तत्र यो वक्त्रा यदृच्छया तत्तत्संज्ञिविषयशक्त्य
भिव्यक्तिद्वारेण तस्मिंस्तस्मिं संज्ञिनि सन्निवेश्यते॥ स वक्तृसं
निवेशितो यथा डित्थादीनां शब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं
स्वरूपं तत्खलु तां तामभिधाशक्तिमभिव्यंजयता वक्त्रा यदृच्छया
तस्मिंस्तस्मिन्संज्ञिनि उपाधितया सन्निवेश्यते॥ अतस्तन्निबन्धना
यदृच्छाशब्दा डित्थादयः येषामपि च उकारादिवर्णव्यतिरिक्त
संहृतक्रमस्वरूपाभावान्न डित्थादिशब्दस्वरूपं संहृतक्रमं
संज्ञिष्वध्यवस्यत इति दर्शनम्। तेषामपि वक्तृयदृच्छाभिव्य
ज्यमानशक्तिभेदानुसारेण काल्पनिकसमुदायरूपस्य डित्थादेः
शब्दस्य तत्तत्संज्ञाऽभिधानाय प्रवर्तमानत्वाद्यदृछाशब्दत्वं
डित्थादीनामुपपद्यत एव। तदेवं पूर्वमुपदर्शितो यो वैयाकरण-

Fol. 5 -नयस्तदाश्रयेणोपाधिर्वक्तृ स्वान्ते वेशित स्वरूपाख्यो व्याख्यातः।
यस्य तु वस्तुधर्मत्वेनोपाधेरवस्थानं तस्यापि द्वैविध्यं साध्य
सिद्धतो भेदा ते तत्र साध्योपाधिनिबन्धनाः॥ क्रिया शब्दा
यथा पचतीति सिद्धस्य उपाधि द्वैविध्यं॥जातिगुणभेदात्।
कस्याचित्वत्तु सिद्धस्योपाधिः पदार्थस्य प्राणप्रदाता यथा जातेः
नहि काश्चित्पदार्थो जातिसम्बन्धमन्तरेण स्वरूपं प्रातिलभते
यदुक्तं वाक्यपदीये॥ गौः स्वरूपेण न गौ नाप्यगौ गोत्वाभि
सम्बन्धात्तु सम्बन्धात्तु गौरिति॥ काश्चित्पुनरुपाधिर्लब्ध स्वरूपस्य
वस्तुनो विशेषाधानहेतुः। यथा शुक्लादेर्गुणः न हि शुक्लादिगुणस्य
Fol. 6 पटादिवस्तुस्वरूप प्रातिलंभनिबंधनत्वं जातिमहिम्नैव तस्य वस्तुनः
प्रातिलब्धस्वरूपत्वात्॥ अतोसौ लब्धस्वरूपस्य वस्तुनो
विशेषाधानहेतुः॥ ये पि च नित्याः परमाणुत्वादयो गुणास्तेषामपि
सर्वेषां गुणजातीयत्वादेवं प्रकारत्वमेव॥ तदेवं प्राणप्रदोपाधि
निबन्धनत्वं यस्य शब्दस्य स जातिशब्दो यथा गवादिः॥ यस्मा
ल्लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुरर्थ प्रतीयते॥ स गुण
शब्दो यथा शुक्लादिः। न तु सर्वेषामपि गुणक्रिया यदृच्छा शब्दा
भिमतानां जाति निबंधनत्वं॥ तथा हि गुण शब्दानां तावत्॥ शुक्ला
दीनां पयः संख बलाकाद्याश्रय समवाये शुक्लादि लक्षणा गुणा
विभिन्नास्तत्समवेत सामान्यवाचिता॥ एवं क्रियाशब्दानामपि
गुडतिलतांडुलादि द्रव्यान्विता ये पाकादयोन्योन्यमन्यत्वेना
वस्थिताः क्रियाविशेषास्तत्समवेतं सामान्यमेव वाच्यं॥
यदृच्छा शब्दानां तु डित्थादीनां शुक सारिका मनुष्याद्युदी-
रितेषु भिन्नेषु डित्थादिशब्देषु समवेतं डित्थशब्दत्वादिकं
सामान्यमेव यथायोगं संज्ञिष्वध्यस्तमभिधेय॥ यदि वोप-
चयापचयाद्योगितया डित्थादौ संज्ञिनि प्रतिकलं भिद्यमा
नेप्यभिधमानो यन्महिम्ना डित्थो डित्थ इत्येवमादिरूपत्वना
भिन्नाकारः प्रत्ययो वाक्यशून्यः संजायते॥ तत्तथाभूतं डित्था
दि शब्दावसेय वस्तु समवेतमेव डित्थत्वादि सामान्यमान्नेष्टव्यं

Fol.6 तच्च डित्थादिशब्दैरभिधीयते॥ अतश्च गुणक्रिया यदृच्छा
Fol.7 शब्दानामपि जातिशब्दत्वाच्चतुष्टयी शब्दानां प्रवृत्तिर्नोपपद्यते। [Fol.7]
अत्राभिधीयते। गुणे क्रियां शब्दसंज्ञि व्यक्तीनामेव तत्तदुपाधि
निबन्धनभेदजुषामेकाकारावगति निबन्धनत्वं न तु जातेरिति
भगवता महाभाष्यकारस्यात्राभिप्रेतम्। यथा ह्येकमेव मुखं
तैलकौ खड्गोदकादर्शादीनां प्रतिबिंबावगति निबंधनानां भेदा
न्नानाकारत्वेन प्रत्यवभासते। तथैवैकैव शुक्लादिव्यक्ति देशकाला
वच्छिन्ना तत्तत्कारणसामग्र्युपजनित शंखाद्याश्रयविशेषवशेन
नानारूपतयाभिव्यक्तिमासादयंती वैचित्र्येण स्युरिति॥ अत
२ श्च तस्याः शुक्लादिव्यक्तेरेकत्वाज्जातेश्च भिन्ना व्ययसमवेत
त्वा शुक्लत्वादि जात्यभावान्न शुक्लादिशब्दानां जातिशब्दत्वं॥
एवं पचतीत्यादौ डित्थशब्दादौ डित्थादौ च संज्ञिनि वाच्यं॥
अत्राप्येकस्या एव पाकादिक्रियाव्यक्तेर्डित्थादिशब्दव्यक्ते
र्डित्थादेश्च संज्ञिनो यथा कर्माभिव्यञ्जकानां पाकादीनां तथा
ध्वनीनां वयोवस्थाविशेषाणां च कौमारादीनां यो भेदस्तद्वशेन
नानाविधेन रूपेणावभासमानत्वात् स्थितमेतच्छब्दप्रवृत्ति
निमित्तानां चतुष्ट्वान्मुख्यः शब्दार्थश्चतुर्विध इति॥ अधुना
लाक्षणिकस्य द्विभेदत्वमुपदर्शयितुमाह॥

शुद्धोपचारमिश्रत्वाल्लक्षणा द्विविधा मता।

लक्षणाया द्विप्रकारकत्वं शुद्धत्वादुपचारमिश्रत्वाच्च॥ शुद्धा
तावल्लक्षणा गङ्गाया घोष इति॥ अत्र हि घोषं प्रति स्रोतोविशे
षस्याधारता नोपपद्यत इति। गङ्गाशब्दः स्वाभिधेयस्य स्रोतो
विशेषस्य च समीपभूततटस्थलक्षणायावगमयति॥ उपचार
Fol.8 मिश्रा तु यत्र वस्त्वन्तरे उपचर्यते॥ यथा गौर्वाहीक इति॥
अत्र हि गोशब्दो वाहीकशब्देनानुपपद्यमानसामानाधिकरण्य
त्वाद्बाधितमुख्यार्थः सन् गोगता ये जाड्यमान्द्यादयो गुणास्तत्स
दृश वाहिकगत जाड्यमान्द्यादिगुणलक्षणाद्वारेण गोगतजाड्य
मान्द्यादिगुणसदृश जाड्यमान्द्यादिगुणापेते वाहिक उपचरितः

Fol. 8 तेनेयमुपचारमिश्रा लक्षणा॥ एवं शुद्धोपचारमिश्रत्वभेदेन लक्षणायां द्वैविध्यमुक्तं॥ इदानीं तु शुद्धाया अपि लक्षणाया द्वैविध्यं दर्शयति। "उपदानलक्षणा च शुद्धा सा द्विविधोदिता॥ योयं लक्षणायां शुद्धा प्रतिपादिता सा द्विविधोक्ता॥ क्वचित्स्वार्थान्तरोपादानेन लक्षणा प्रवर्तते। क्वचित्त्वर्थान्तरलक्षणेन किं पुनरर्थान्तरस्योपदानं किंवा तस्य लक्षणमित्याशङ्क्याह॥

स्वसिद्ध्यर्थतयाक्षेपो यत्र वस्त्वन्तरस्य तत्।
उपादानलक्षणं तु तद्विपर्ययतो मतम्॥

यत्र स्वसिद्ध्यर्थतया वस्त्वन्तरस्याक्षेपो भवति ततत्रोपादानं॥ यथा गौरनुबंध इति अत्र हि गोत्वस्य यागं प्रति साधनत्वं शाब्दं व्यक्त्याक्षेपमन्तरेण नोपपद्यते इति। तत्सिद्ध्यर्थतया व्यक्तेराक्षेप:॥ यथा च पीनो देवदत्तो दिवा न भुंक्ते इति॥ अत्र हि पीनत्वं दिनाधिकरणभोजनाभावविशिष्टतयावगम्यमानमेव कार्यत्वात्स्वसिद्ध्यर्थत्वेन कारणभूतं रात्रिभोजनमाक्षेपादभ्य

पीनत्व न्तरीकरोति न हि तस्य रसायनाद्युपयोगजन्मना प्रमाणांतरेण तदभावावसाये सत्ये तस्योदाहरणत्वात्। पीनत्वस्य चात्र दिनाधिकरणभोजनाभावविशिष्टत्वेन रसायनाद्युपयोगबाधहेतुत्वात्।

Fol. 9 अत्र च रात्रौ भुंक्ते इत्येतच्छब्दाक्षेपपूर्वकतया प्रमाणस्यापरिपूर्णस्य परिपूरणाच्छ्रुतार्थापत्तित्वं भवत्वथवा कारणस्यैव रात्रिभोजनस्याक्षेप:॥ इति सर्वथा स्वसिद्ध्यर्थत्वेनार्थांतरस्याक्षेपपूर्वकतयान्तर्भावेनादुपादानत्वमुपपद्यते। यत्र तु पूर्वोदितोपादानरूपविपर्यासिसंश्रयान्न स्वार्थसिद्ध्यर्थतयार्थान्तरस्याक्षेप:॥ अपि त्वर्थान्तरसिद्ध्यर्थत्वेन स्वार्थसमर्पणम्। तत्र लक्षणं यथा पूर्वमुदाहृतं गङ्गायां घोष इति॥ अत्र हि तटस्य घोषाधारतया क्रियान्वितस्य गंगाशब्देन समर्पणं क्रियते॥ अतोर्थान्तरभूतं तटमवगमयता गङ्गायाशब्देन स्ववाच्यभूत: स्रोतो विशेषो ~~म~~ अर्प्यते गम्यते॥ इत्यर्थान्तरसिद्ध्यर्थत्वे स्वार्थसमर्पणं॥ एवं चात्र पूर्वोदितोपादानरूपविपर्यासलक्षणत्वं॥

Fol.9 एवं शुद्धा लक्षणा द्विविधा प्रविभक्ता। इदानीमुपचारमिश्रां
चतुर्भेदत्वेन निरूपयितुमाह ॥

आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः।
प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्विधः॥

द्विविध उपचार शुद्धो गौणश्च ॥ तत्र शुद्धो। यत्र मूल
भूतस्योपमानोपमेयभावस्याभावेनोपमानगत गुणसदृश
गुणयोगलक्षणासंभवात्कार्यकारणभावादि संबंध लक्षणया
वस्त्वन्तरे वस्त्वन्तरमुपचर्यते ॥ यथा आयुः घृतमिति ॥ अत्र ह्या-
युषः कारण घृते तद्गत कार्यकारणभाव लक्षणापूर्वकत्वेनायुष्वं
कार्यं तच्छब्दश्चेत्युभय भावसमुपचरितं ॥ तस्माच्छुद्धोयमुप
चारः गौणः पुनरुपचारो यत्र मूलभूतोपमानोपमेयभावस-
Fol.10a माश्रयेण उपमानगतर्यते। स हि गुणेभ्य आगतत्वाद्गौणशब्देन
भीधीयते ॥ यथा गौर्वाहीकः॥ अत्र हि गोगत जाड्यमांद्यादि-
गुणसदृश जाड्यमान्द्यादि योगाद्वाहीके गोशब्द गोत्वयो रुपचारः॥
केचित्तूपचारे शब्दोपचारमेव मन्यन्ते। नार्थोपचारमेतदुक्तं
शब्दोपचारस्यार्थोपचारा विनाभावित्वात्॥ एवमयमुपचारः॥
शुद्ध गौण भेदेन द्विविधोभिहितः॥ तस्य च प्रत्येकं द्वैविध्यमध्या
रोपाध्यवसानाभ्यां। यत्राध्यारोप्य विषययोर्भेदमनपह्नुत्यैव
वस्त्वन्तरे वस्त्वन्तरमुपचर्यते ॥ तत्रानपह्नुत स्वरूप एव वस्त्वन्त
रे वस्त्वन्तरस्याधिकस्यारोप्यमाणत्वादध्यारोपः॥ यथा पूर्वोक्तयो
रुदाहरणयोः॥ तथा ह्यायुर्घृतमित्यत्र नायु लक्षण कार्यान्तर्ली
नतया कारणभूतस्य घृतस्य प्रतिपत्तिः॥ स्वरूपेणैव तस्य प्रति
पत्तिः॥ स्वरूपेणैव तु तस्य प्रतीयमानस्यायुःकारणत्वादायुष्वं
प्रतीयते॥ तेनात्राध्यारोपः॥ एवं गौर्वाहिक इत्यत्रापि च उपमानो
पमेय स्वरूपानपह्नवात्॥ तदेवं यत्रोपचर्यमाणेनोपचर्यमाण
विषयस्योपचर्यमाणेन्तर्लीनतया विवक्षितत्वात्स्वरूपापह्नवः
क्रियते। तत्र व्यवसानं॥ तत्र शुद्धोपचारे व्यवसानस्योदाहरणं
पंचाला इति॥ अत्र हि पंचालापत्यानिवासाधिकरणत्वाज्जनपदे

On marg. जनपदस्य च लक्षणादिति संबन्धः

Fol. 10 लक्षितलक्षणया पंचालत्रा शब्दः प्रयुज्यते। पंचालेनापत्यानां
Fol. 11 लक्षणादपत्यैश्च स्वनिवासाधिकरणस्य जनपदस्य नवाशेपच
र्यमाणार्थ विषयस्योपचर्यमाणाद्भेदेन प्रतिपत्तिः। उपचर्यमाणा
र्थ निगीर्णतयैव तस्य प्रतिपत्तेः। तेनात्रोपचारत्वरूढिमाहा
त्म्यादभ्रष्टमिव लक्षते। अतोऽत्राध्यवसानगर्भः शुद्ध उपचारः
गौणोपचारे त्वं व्यवसानस्योदाहरणं॥ राजेति। राजशब्दो
ध्रंध्र प्रयोगदर्शनात्क्षत्रिये मुख्यया वृत्त्या प्रयुक्तः सन् अन्य
त्र शूद्रादौ क्षत्रियगत जनपदपुरपालन सदृश जनपदपुरपालन
योगलक्षणपूर्वकतया गौणावृत्त्या प्रजप्यते पि लत्वते॥ तेनात्र
गौणत्वं संगित्येव प्रतीयमानत्वाद्दृष्टं साद्विचारणया समाधि-
गम्यते। अतोऽत्राध्यवसानगौणगर्भो गौण उपचारः॥ तदेवमुप-
चारश्चतुर्विधः प्रविभक्तः॥ एतेन चतुर्विधेनोपचारेण सह
पूर्वोक्तौ लक्षणाभेदौ संकलय्य षट्प्रकारा लक्षणा वक्तव्या।
एषां च लक्षणा त्रिस्कंधा (त्रिसमुदाया) शुद्धत्वादध्यारोपादध्यवसानाच्च॥
तत्र शुद्धस्कंधस्य द्विविधर्यमुपादानलक्षणाभ्यामुक्तम्॥
अध्यारोपाध्यवसाने स्कंधयोरपि प्रत्येकाद्विप्रभेदता॥ शुद्धे
गौणोपचारमिश्रत्वात्॥ तत्र तेषां त्रयाणां स्कंधानां विषयविभागं
प्रदर्शयितुमाह॥ "तटस्थलक्षणा शुद्धा स्यादारोपस्त्वदूरगा।
निगीर्णध्यवसानं तु रूढ्या सन्नतरत्वतः॥
येषा लक्ष शुद्धा उपादानलक्षणात्मकत्वेन द्विप्रभेदा प्रतिपा
दिता॥ सा लक्षकार्थानुपरक्तत्वात्॥ तटस्थतया प्रतीयमाने
लक्ष्येऽर्थे द्रष्टव्या॥ न हि तत्र लक्षकार्थोपरक्ततया लक्ष्यस्या-
Fol. 12 र्थस्यावगतिः॥ तथा हि गंगायां घोष इत्यत्र घोषाधिकरणभूत (Fol. 12)
-टोपलक्षणाभिसं-नेन गंगायां घोषो न वितस्तायामिति।
गंगाशब्दे प्रयुज्यमाने तटस्यास्त्रोतो विशेषणोपलक्षकत्वमात्रो
पयुक्तो नोपरागो न प्रतीयते॥ तटस्थेनैव तस्य तटस्य प्रत्ययात्।
एवमुपादानेऽपि वाच्यं॥ यथा पीनो (पीनत्वरात्रिभोजनयो) देवदत्तो दिवा न भुंक्ते इति॥
यदा तु गंगाशब्दाभिधेयस्य स्त्रोतोविशेषस्यादूरवर्तितया

Fol. तटमनपह्नुतस्वरूपं स्रोतोविशेषोपरक्ततया विवक्षितं भवति॥ तदा
पूर्वस्मिन्नुदाहरणेऽध्यारोपो भवति॥ स्रोतोविशेषोपरक्तस्य तटस्य प्रतीते
स्रोतोविशेषादूरवर्तित्वात् स्रोतोविशेषरूपे तटे घोष इति॥ यदा तु
त्वत्यन्तमासन्नतां घोषं प्रति स्रोतोविशेषस्य प्रतिपादयितुमेतद्वाक्यं
स्रोतोविशेषनिर्गीर्णतया तटमपह्नुत्य प्रयुज्यते॥ गंगायामेव
साक्षाद् घोषो न त्वन्यत्रेति॥ तदाऽध्यवसानं॥ यथा चैतच्छुद्धो
पचारनिष्ठतयाऽध्यारोपाध्यवसानयोरुदाहरणमुक्तं॥ तथा गौणे
ऽप्युपचारे वाच्यं॥ गौर्वाहीक इति॥ तथा गौरेवायं साक्षादिति।
अत्रापि हि यथाक्रमं गोगतगुणसदृशगुणयोगद्वारेण गोरविदूरत्वेन
वाहीकस्य विवक्षितत्वात् गौत्वाध्यारोपः॥ गोगतानां तु गुणानां
मुत्कटत्वे वाहीकस्य गोगौत्वाध्यवसानं यथा नासन्नतरत्वेनाध्यवसान
पूर्वं प्रविभक्तं॥ तथा रूढित्वेनापि प्रविभक्तव्यम्॥ यथा पूर्वोपद-
र्शितयोरुदाहरणयोः पंचाला इति। तथा राजेति॥ तदिदमुक्तं
रूढ्यासन्नतरत्वत इति॥ रूढित्वादासन्नतरत्वाच्च निगीर्णार्थे
Fol. 13 व्यवसानं स्यादित्यर्थः॥ न तु मुख्येऽर्थे शब्दस्य सम्बन्धावधार Fol. 13
णा प्रतिपादकत्वमुपपद्यते न तु लाक्षणिके तद्विपर्ययात्॥ तथा
हि सम्बन्धावधारणसमये व्यवहर्तृगतयोस्तावच्छुद्धप्रयोगार्थ
प्रतिपत्त्योरविभक्तौ देशवाक्यवाक्यार्थनिष्ठतया पूर्वहेतुफल
भावावसायो भवति। तदनन्तरं च त्रिचतुरादिदर्शनेभ्यो
ऽन्वयव्यतिरेकाभ्यां वाक्यवाक्यार्थोद्देशप्रविभागगते ये
प्रयोगप्रतिपत्ती तन्निष्ठकार्यकारणभावावधारणं। तदुत्तरकालं
व्यवहर्तृगतार्थप्रतिपत्त्यन्यथानुपपत्त्या शब्दार्थसंब
न्धावगतिः॥ सा च मुख्य एवार्थे जाऽऽत्यादौ चतुर्विधे न तु
लाक्षणिके षट्प्रकारे न हि लाक्षणिकेनार्थेन सह शब्दस्य संबंधो
मुख्येनैवार्थेन परिदृश्यते। तथा भावे हि सति तस्य मुख्यत्वमेव
स्यान्न लाक्षणिकत्वम्॥ अथ शब्दस्य मुख्यो योऽसावर्थस्तेन
सह संबंधो लक्ष्यमाणस्यार्थस्य दृष्ट इति तद्द्वारेण शब्दात्तस्याव
गतिरित्यभिधीयते॥ एवं सति यदि निरपेक्षः स्वार्थप्रतिपादन-

Fol. 13 द्वारेण लक्ष्यमाणमर्थमवगमयति। सर्वदा तमर्थमवगमयेत्
अथ सापेक्षः। किं तस्यापेक्षणीयमित्याशङ्क्याह॥

वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात्।
लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः॥

यः परप्रतिप्रत्तये वाक्यमुच्चारयति स वक्ता साकांक्षाणां पदानामेकार्थसमूहो वाक्यं॥ शब्देन द्विविधं॥ मुख्यं लाक्षणिकं वा॥ अभिधाव्यापारमाश्रित्य यद्गोचरीक्रियते। तद्वाच्यं॥ एतेषां त्रयाणां वक्त्रादीनां व्यस्तसमस्तभेदभिन्नानां देशकालावस्थास्वात्लक्षण्यगतसमस्तव्यस्तभेदा संयोजितानां
f. 14 यः स्वभावभेदप्रपंचस्तत एषा Fol. 14 षट्प्रकारा लक्षणा परामर्शकुशलैर्विवेचनीया तथाविधवक्त्रादिसामग्र्यपेक्षयैव शब्दानां स्वार्थमवगमयतां स्वार्थद्वारेण लक्ष्यमाणार्थसंबंधस्य वृद्धस्य व्यवहारेणैव धारित्वात्॥ एतदुक्तं भवति। न शब्दानामनवधारितलाक्षणिकार्थसंबन्धानां लाक्षणिकमर्थं प्रति गमकत्वं नापि च तत्र साक्षात्संबंधग्रहणं। किं तर्हि वक्त्रादिसामग्र्यपेक्षया स्वार्थव्यवधानेनेति। यदुक्तमाचार्यशबरस्वामिना। कथं पुनः परशब्दः परत्र वर्तते स्वार्थाभिधानेनेति ब्रूमः इति॥ अत्र हि स्वार्थद्वारेण लक्ष्यमाणार्थाभिनिवेशितशब्दानामुक्त्वा पुनश्चासाविवाह लक्षणोऽपि हि लौकिक्यैवेति॥ अत्र हि संबंधावधारणसापेक्षाणां शब्दानां लक्ष्यमाणेऽर्थे प्रवृत्तिरुक्ता॥ व्यवहारोपारूढानि हि प्रत्यक्षादीनि प्रमाणानि लौकिकशब्देनाभिधीयते॥ लोके च विदिता लौकिकी व्यवहारानगम्या परिगृहीता॥ संबंधशब्दानिष्टेत्यर्थः॥ तदुक्तं भट्टकुमारिलेन॥

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्॥
क्रियन्ते^[या] सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः॥ इति

निरूढा लक्षणा राजेत्यादिकाः॥ सांप्रतं क्रियन्ते। या वृद्धव्यवहारवक्त्राद्यपेक्षया तथाविधेऽन्यत्र विषये परिदृष्टस्वभावाः॥

यथा॥

स्निग्धश्यामलकांतिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानंदकेकाः कलाः॥
कामं संतु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे।
वैदेही कथं भविष्यति ह हा हा देवी धीरा भवति।

Fol. 15 अत्र हि लिप्तशब्दकांतेः कुंकुमादिवल्लेपनसाधनत्वाभावाद Fol. 15
बाधितमुख्यार्थः॥ अतान्तर स्वार्थगतो योऽसाधीपतिरो धीय
मानत्वादि धर्मः प्रतिपादितः॥ तत्सदृशे पतिरोधीयमानत्वादि
धर्मयोगात् क्रांति संपृक्तोऽर्थो लक्ष्यते। एव सुहृच्छब्देनापि
पयोदानामचेतनत्वेन मैत्रीसंबंधाभावान्मुख्यशब्दार्थाभावे
सति सुहृद्गता ये ते सान्मुख्यादयो धर्मास्तत्सदृशसान्मुख्यादि
धर्मयोगिनः पयोदाभिमुखा मयूरा लक्ष्यन्ते। रामशब्दस्या
पि प्रतिपन्नत्वात्संज्ञिनो मुख्यशब्दार्थबाधः। अतस्तेनापि राज्य
भ्रंश वनवास सीतापनयन पितृमरणादयः स्वाभिधेयभूतार्थैक
* गामिनो साधारणदुःखहेतवो धर्मा विशिष्टसामग्र्यनुप्रविष्टेन
लक्षिताः॥ तदेवमादीनां लक्षणानां सांप्रतं क्रियमाणता॥ यासां
तु लक्षणानां वृद्धव्यवहारे न च तस्मिन् शब्दे राजशब्दवद्दर्शनं
नापि च तज्जातीयेषु शब्दान्तरेषु लिप्तादिशब्दवत्तासामश-
क्यत्वात् क्रियमाणत्वमेव॥ यथा

मध्ये समुद्रं ककुभः पिसंगी यां कुर्वती कांचनभूमिभासा।
तुरंगकान्तानन हव्यवाह ज्वालेव भित्वा दिवमुल्ललास॥

अत्र हि तुरंगकान्तानन हव्यवाह शब्दो वडवामुखाग्नौ
लक्षणया प्रयुक्तः॥ न चासौ वडवामुखाग्नौ निरूढो नापि च
तज्जातीयाः शब्दाः विशिष्टा सामग्र्यनुप्रविष्टतया विधाविवार्थकगाहित्वेन
परिदृष्टा। न तु द्विरेफादीनां शब्दानां रेफद्वितयानुगतभ्रमरादिशब्द
लक्षणा द्वारेण यथा षट्पदादौ प्रवृत्तिस्तथा तुरंगकान्तानन हव्य
वाह शब्दस्यापि वडवामुखाग्नौ वडवादिशब्दलक्षणाद्वारेण कथं
Fol. 16 प्रवृत्तिर्न स्यात् तज्जातीये द्विरेफादौ शब्दलक्षणायाः परिदृष्टत्वा.

Fol 16. नैतत् यतो वृद्धव्यवहाराभ्यनुज्ञानेऽप्येव शब्देषु तज्जातीय
शब्द दर्शनाल्लक्षणात्वमभ्युपगम्यते॥ न तु सर्वत्र। अन्यथा
सर्वेषामेव शब्दानां येन केनचिज्जातिलेशेन ---- सर्वानर्था
न् प्रति लक्षणाशब्दत्वस्य वक्तुं शक्यत्वात्॥ न कश्चित् छब्द:
किंचिदर्थं प्रत्यगमक:स्यात्। वृद्ध व्यवहाराद्यनुज्ञायां तु
विषयविभागेंगीकृयमाणे तुरंगकांताननहव्यवाहेत्यादीनां
असति प्रयोजने दुष्टत्वमेव सति तु गुप्तार्थप्रतिपादनादि
प्रयोजन सद्भाव एवं विधानामपि लक्षणानाम दुष्टत्वं॥
तथाविध विषये वृद्ध व्यवहारेण तासामनुज्ञातत्वात्। तदेवं वक्त्रा
दि सामग्र्यनु प्रवेशेन शब्दानां स्वार्थमर्पयिता नर्थांतरप्रतिवृद्ध
व्यवहारे स्वरूपद्वारेण सजातीय शब्द द्वारेण वा गमकतयाव-
धारितानां लक्षत्वमिति स्थितं। तत्र वक्तृ निबंधनत्वेन यत्र लाक्ष
णिकोर्थोवगम्यते। तत्रोदाहरणं।

दृष्टिं हे प्रतिवेशिमानि क्षिणमिहाप्यस्मद्गृहे दास्यासि
प्रायो नैव शिशो: पिताद्य विरसा: कौपीरप: पास्यति।
एकाकिन्यपि यामि तद्वनमित: स्रोतस्तमालाकुलम्।
नीरेंद्रा: वपु रालिखंतु जरटच्छेदा नल ग्रन्थय इति

अत्र हि परसंभोगानुभवेच्छया संकेतस्थानं युवतिर्व्रजंति
स्वप्रवृत्ति प्रयोजनं विशिष्ट संकेतस्थानाचारं परपुरुषसंभोगा
त्मकं॥ तथा संभोगचिह्नानि। नखदशनक्षतानि॥ गात्र संलग्नत-
या शंक्यमान विद्रावानि यथाक्रमं भर्तृपिपासा निवृत्तिक्षमना-
Fol. 17 देयसरसपानीयानयनेन चिरछिन्न नलग्रंथि पुरुषजर्जर प्रावजानि पिष्यमाणेन
च गात्रगतविकारविशेषोद्भमेनापह्नुत्याभिधत्ते॥ सा चात्रापह्नुति
रसाध्या वक्तृत्वं पर्यालोच्यावगम्यते॥ अपह्नवस्य चालीक वस्त्व
भिधानात्मत्वादलीकस्यासत्यार्थ विपर्यासकारित्वादलीकेनार्थे
नात्र सत्योर्थ: स्वासिद्ध्यर्थत्वेनाक्षिप्यते। तेनात्र वक्तृविशेष
पर्यालोचनया सत्यार्थ निष्ठया उपादानात्मिकाया लक्षणाया:
प्रतिपत्ति:। नह्य प्रवाक्य वाच्यै: सामर्थ्या साध्या वक्तृत्वे

Fol. 17 सति तयोरेवं विधार्थक्षेपासमर्थत्वात्॥ वाक्यगतरूपविशेष
पर्यालोचनया तु यत्र लाक्षणिकार्थपरिग्रहस्तत्रोदाहरणं॥

प्राप्तश्रीरेष कस्मात् पुनरपि मथितं मंथखेदं विधत्ते।
निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयातः।
त्वय्यायाते वितर्कानिति दधत इव भाति कम्पः पयोधेरिति

अनेन हि चाटुश्लोकेनोपश्लोक्यते यो नृपतिस्तदीयबलभर
क्षोभ्यमाणस्वावस्थस्य समुद्रस्य यः कंपोतिशयोक्त्योपवर्णित
स्तस्य समुद्रकर्तृकं वितर्कधारणं हेतुत्वेनोत्प्रेक्षित इति विभ
विभ्रद्दधत इति ते च वितर्काः प्राप्तश्रीरित्यादिना भगवद्वासु
देवव्यापारविशेषविषयाः यावत्तु तस्य नृपतिर्भगवद्वासुदेव
ता नास्ति तावत्कथं तदीयेषु व्यापारविशेषेषु संशयः समुप
जायते अतोत्र यदेतद्बलभराक्रान्तत्वेन समुद्रस्याकम्पमा-
नस्यापि कम्पमानार्थसादृश्यात्कम्पमानत्वमध्यवसितं॥ तत्रो
ध्यवसानगर्भो गौणोपचारः अकंपमानस्यापि तस्य कम्पमानार्थ
Fol. 18 त्वेनाध्यवसितत्वात्। अत एव यं भेदेप्यभेद इत्येवमात्मिका
अतिशयोक्तिः वितर्कवशात्स्वस्थेनानां मूर्धकम्पो बाहुल्येन परिदृ
श्यत इति। चेतनगतसंशयहेतुकमूर्धकम्पसादृश्यात्तद्वासा चास्य
कम्पस्योपचर्यते॥ एवं चात्राप्यध्यवसानगर्भो गौणोपचारः
इयमपि च भिन्नयोरपि कम्पयोरभेदेनाध्यवसानाद्भेदेप्यभेद इत्ये
वमात्मिका अतिशयोक्तिः तन्निबंधनैवचेयमुत्प्रेक्षा इति वितर्कान्
दधत इति वेति। अत्र हि कार्यभूतस्य कम्पदर्शनात्कारणभूतं
वितर्कधारणं मिथ्याज्ञानस्वरूपयोत्प्रेक्षयोत्प्रेक्ष्यते॥ अत्रापि
च वितर्कानिव धारयतोपि पयोधेः वितर्कधारणायनिबंधाद
भेदेप्यभेद इत्येवात्मिका अतिशयोक्तिर्गर्भीकृता॥ यदुक्तमुत्प्रे
क्षालक्षणा साम्यरूपा विवक्षायां वाक्ये वाच्यात्माभिः पदैः अत
द्गुणक्रियायोगादुत्प्रेक्ष्यातिशयान्विता॥ तेनात्राप्यध्यवसान
गर्भो गौण उपचारः॥ प्राप्तश्रीरित्यादिषु त्रिषु वितर्केषु भगवद्

Fol. 18 वासुदेव विषयेषु यथायोगं तत्तश्च कार्यनिराकारणहेतुगर्भतया प्रवर्तमानेषु नृपाति भगवद्वासुदेवता क्षिप्ता॥ तेनात्रोपादानात्मिका लक्षणा भगवद्वासुदेवरूपतया राज्ञ नृपातिरध्यवसानादध्यवसानगर्भो गौण उपचारः॥ एतच्चात्र सर्वं वाक्योपात्तपदसमन्वयान्यथानुपपत्त्या गम्यत इति वाक्यनिबंधनात्र लक्षणा वाच्यनिबन्धना तु यथा॥

दुर्वारा मदनेषवो दिशि दिशि व्याजृंभते माधवो।
हृद्युन्मादकराः शशांकरुचयो चेतोहरः कोकिलः॥
Fol. 19 उत्तुंगस्तनभारदुर्धरमिदं प्रत्यग्रमन्यद्वयः।
सोढव्याः सखि सांप्रतं कथमिमे पंचाग्नयो दुःसहा॥इति॥

अत्र हि स्मरशरप्रभृतीनां पंचानामध्यारोपितवह्निभावानामथवाध्यवसितवह्निस्वभावानामसह्यत्वं वाक्यार्थीभूतं॥ अतस्तस्य वाच्यता॥ तत्पर्यालोचनासामर्थ्याच्च विप्रलंभशृंगारस्याक्षेप इत्युपदानात्मिका लक्षणा वाच्यनिबंधना नह्यत्र वक्तृस्वभावपरिशीलनस्य शब्दरहितस्योपयोगः। नापि च वाक्ये पदानां विप्रलंभशृंगाराक्षेपमन्तरेणान्वयानुपपत्तिः। वाच्यस्वरूपविचारेण त्वत्र विप्रलंभशृंगारस्याक्षेपादुपादानात्मिका लक्षणा वाच्यनिबधना विप्रलंभशृङ्गारस्य वा चात्राक्षिप्यमाणस्यापि वाच्यापेक्षया प्राधान्यं॥ सुहृदयहृदयाह्लादहेतुतया प्राधान्येनाक्षेपात॥ हृद्युन्मादकरा इत्यत्र सत्यपि शशांकरुचीनां स्त्रीत्वे हेतुताच्छील्यानुलोम्यानामविवाक्षितत्वाट्टक्प्रत्ययाभावेऽचप्रत्ययान्तत्वादीकाराभावः। पूर्वं चात्र कर्मसंबन्धस्याविवक्षणादण्प्रत्ययस्याभाव इत्यप्रत्ययः॥ शिवशर्मरिष्टस्य कर इतिवत अत एव वा हेत्वादिविवक्षायामपिट प्रत्ययोभावाददोषाः॥ एव वक्तृवाक्यवाच्यानामेकैकसमाश्रयेण येऽत्र त्रयो भेदा भवंति ते तावदुदाहृताः अन्येऽपि च ये वक्तारं वाक्यवाच्ययोरन्यतरेण संयुज्यते तथा वाक्यवाच्ययोरन्यतरेण संयोज्यन्ते तथा वाक्य-

Fol. 19 वाच्येन सह समुच्चित्य द्विकभेदास्त्रयस्तथा त्रिकभेदाश्च वक्तृ-
वाक्यवाच्यानां त्रयाणामपि परस्परसंयोजनया एक इत्येवं
चत्वारो भेदा दृश्यन्ते॥ ते स्वबुद्ध्या षट्प्रकारलक्षणाविषयत्वेन
Fol. 20 मनीषिभिरुदाहार्याः॥ एतेषां च देशकालावस्थास्वालक्षण्यगत
समस्तव्यस्तभेदप्रपंचसंयोजेनालक्षो न्वेषणीया॥ तदेवं चतु-
र्विधमुख्योऽर्थो ~~निर्णीतः~~ निर्णीतः॥ लक्षणा तु षट्प्रकारोक्ता॥ इदानीं
माभिहितान्वयोऽन्विताभिधानं॥ तत्समुच्चयस्तु उभयाभावश्चेत्येवं
ये चत्वारः पक्षास्तेषु लक्षणाया कक्ष्यविभागं दर्शयितुमाह॥

अन्वयेऽभिहितानां सा वाच्यत्वादूर्ध्वमिष्यते
अन्वितानां तु वाच्यत्वे वाच्यत्वस्य पुरःस्थिता॥
द्वये द्वयमखण्डे तु वाक्यार्थे परमार्थतः।
नास्त्यसौ कल्पितेऽर्थे तु पूर्ववत्प्रविभज्यते॥

इह केषांचिदन्वयव्यतिरेकावसेय सामान्यभूत स्वार्थमात्राभिधायिने-
षु पदेषु पदार्थाकांक्षासन्निधौ योग्यता महिम्ना वाक्यार्थस्यान-
भिधेयभूतस्य हर्षशोकादिवदवसेयत्वमेव॥ यथा हि ब्राह्मण
पुत्रस्ते जातः ब्राह्मण कन्या ते गर्भिणीतीति॥ यथाक्रमं पुत्र
जन्म कन्यागर्भिणीत्वनिमित्तौ हर्षशोकौ स्वशब्देनानभिहिता
वपि शब्दाभिधेयभूत वस्तु सामर्थ्यादाक्षिप्येते॥ एवं वाक्यार्थ-
स्यानभिधेयभूतस्यैव पदार्थाक्षेपत्वं द्रष्टव्यं॥ एषा वै वादिना
मतेऽन्वयः॥ अपरे त्वाहुः॥ वृद्धव्यवहाराच्छब्दार्थसम्बन्धत्वाव
साय स च वृद्धव्यवहारः प्रवृत्तिनिवृत्तिरूपः॥ प्रवृत्तिनिवृत्ती च
विशिष्टार्थनिष्ठे॥ अतो विशिष्ट एवार्थे पदानां स (MSS) च वा न वृत्तिः
ततश्च विशिष्ट एव पदार्था न तु पदार्थानां वैशिष्ट्यम्॥ एवं
च परस्परान्वितानां वाक्यार्थरूपतापन्नानां तत्तत्सामान्याव
च्छादितत्वेन गृहीत स्ववाचकसंबंधानां पदैः प्रत्यायनादान्वि
ताभिधानमिति॥ अन्येषां तु मतं पदानां तत्तत्सामान्यभूतो
Fol. 21 वाच्योऽर्थः॥ (Fol. 21a) वाक्यस्य तु परस्परान्विताः पदार्था इति॥ पदापेक्ष
याभिहितान्वयः वा एवं चेतयोरभिहितान्वयान्विताभिधानयोः

Fol. 21 समुच्चितयोः समुच्चय इति। अखंड वाक्य वाक्यार्थवादिनस्त्वाहुः
विशिष्टस्य वस्तुनो वाक्यार्थत्वेऽभ्युपगम्यमाने विशेषस्यानु
याथित्येन तद्विपरीत सामान्यभूतार्थावच्छादिततया विशेषाणां॥
स्ववाचकः संबंधग्रहणमुपपद्यते॥ अतः परमार्थतो वाक्यार्थयो
रखंडत्वान्नाभिहितान्वयो नाप्यन्विताभिधानं नैव तत्समुच्च
यो युज्यते पदार्थानामविद्यमानत्वात् कल्पितपदार्थनिष्ठत्वेन
भूयमपि व्यस्तसमस्तरूपतया कल्पते इति॥ तत्र च यदा
तावदभिहितान्वयस्तदा स्ववाचकैरभिहितानां पदार्थानामभि
धोत्तरकालमाकांक्षा योग्यतासान्निधे महात्म्याद्विशेषण विशेष्य
भावात्मके परस्परमन्वये सति सा लक्षणा॥ पदार्थानां सामा-
न्यभूतानां यद्वाच्यत्वं तस्मादूर्ध्व वाक्यार्थे पदार्थसामर्थ्या
दवगम्यमाने सतीष्यते॥ अन्विताभिधानपक्षे तु त्वान्वि-
तानां विशिष्टानामेव पदार्थानां वाच्यत्वमेव माभिधेयत्वं
न तु पदार्थानां सामान्यभूतत्वेनाभिहितानां विशिष्टानां एवं। ते च
विशिष्टानां वस्तूनां पदार्थत्वं तावन्न घटते॥ यावत्सकलवाक्या
र्थे तु याथितया प्रतिपन्नस्याव्यभिचारितस्तद्वाचकसंबंध
स्य सामान्यरूपस्य निमित्तभूतस्यार्थस्य संप्रत्यये सति तत्त-
द्वाक्यार्थस्वभाविषयतया यथा विषयं षट्प्रकारा लक्षणा
नाविर्भवति॥ अतोऽन्विताभिधान विशिष्टानां पदानां वाक्या
Fol. 22 र्थस्वभावानां Fol. 22 यद्वाच्यत्वं तस्य पुरस्तस्मात्पूर्वनिमित्ताव
स्थायां लक्षणावास्थिताभिहिताभिधान समुच्चये तु पूर्वोदित
न्यायद्वितय संकलनया पदापेक्षया वाच्यत्वेत्तरकालभाविनी
लक्षणा भवति वाक्यवाच्यात्वर्थान्तरस्याः पूर्वमवस्थानां। तदिदं
मुक्तं द्वये द्वयामिति। द्वये अभिहितान्वयान्विताभिधाया
समुच्चयात्मके द्वयं वाच्यत्वादूर्ध्वत्वम्॥ प्राग्भावश्च लक्षणाया
इत्यर्थः॥ अखण्डे तु वाक्यार्थे असौ लक्षणा परमार्थेन
नास्ति। भिन्नानां पदार्थानां परमार्थतोऽभिधेयभावभावस्या
नुपपद्यमानत्वात्तदाश्रयत्वाच्च लक्षणायाः कल्पितपदार्थ-

Fol. 22 संश्रयेण तु सा लक्षणा यथारुचि पूर्ववदभिहितान्वयान्विताभिधानतत्समुच्चयकल्पनया विभक्त्या। भागाभिनिवेशापस्मारस्या देशकालावच्छेदेनाशेषव्यवहकर्तृनिष्ठतया रूढत्वात्॥ एवमाभिहितान्वयादि चतुष्टये लक्षणाया: कक्ष्याविभागो निरूपित:॥ इदानीमेतस्या लक्षणाया यत्र मुख्यार्थसंभवस्तत्र मुख्यार्थासन्नवस्तुविषये सति योजने प्रवृत्तिमुपदर्शयितुमाह।

"मुख्यार्थासंभवात्सेयं मुख्यार्थासंनिहेतुका रूढे: प्रयोजनाद्वापि व्यवहारे वलोक्यते॥" या चेयं षट्प्रकारा लक्षणा पूर्वमुक्ता सा मुख्यस्यार्थस्य प्रमाणांतरबाधितत्वेनासंभवा। लक्ष्यमाणस्य चार्थस्य मुख्यार्थप्रत्यासन्नत्वात्सान्तरार्थग्रहणस्य च सप्रयोजनत्वादित्येवं विधकारणवृत्तयात्मसामग्रीसमाश्रयेण न वृद्धव्यवहारे परिदृश्यते॥ यच्च तन्मुख्यार्थसिन्नत्वं तत्पंचप्रकारलक्षणा पंचधा मतेति॥ Fol. 23 केन प्रयोजनस्यापि
Fol. 23 द्वैविध्यं॥ किंचिद्धि सान्तरार्थपरिग्रहे प्रयोजनमनादिवृद्धव्यवहारप्रसिद्ध्यनुसारेणात्मकत्वाद्रूढ्य[illegible]नुवृत्तिस्वभावं॥ यथा द्विरेफादौ द्विरेफशब्देन [illegible] रेफद्वितययोगि भ्रमरशब्दलक्षणाद्वारेण रूढ्यनुवृत्तिरेव क्रियते॥ अपरं तु रूढ्यनुसरणात्मकं यत्प्रयोजनमुक्तं चव्यतिरिक्तं वस्त्वन्तरगतस्यासंविज्ञानपदस्य रूपविशेषस्य प्रतिपादनं नाम॥ यथापूर्वमुदाहृतम्॥ रामोस्मीति। एतच्च प्रयोजनद्वितयं मुख्यार्थसंभवे सति मुख्यार्थप्रत्यासन्नतया पूर्वोपदर्शितेन संबंधपंचकेनावगम्यमाने लाक्षणिकेर्थे यथा। विषयमनुसर्तव्यम्। तत्र संबंधलक्षणा गंगायां घोष इति॥ अत्र हि गंगाशब्दाभिधेयस्य श्रोतोविशेषस्य घोषाधिकरणत्वानुपपत्त्या मुख्यशब्दार्थबाधे सति यो सौ समीपसमीपिभात्मक: संबंध: तदाश्रयेण तटं लक्षयति॥ अत्र च लक्षणाया प्रयोजनं तटस्य गंगात्वैकार्थसमवेता॥ संविज्ञानपद पुण्यत्वमनोहरत्वादि प्रतिपादनम्॥ न हि तत्पुण्यत्वमनोहरत्वादि स्वशब्दै: स्प्रष्टुं शक्यते॥ ——

Fol. 23 अव्याप्त्यव्याप्तिप्रसंगात्॥ सादृश्यलक्षणाया मुदाहरणं॥

भ्रमर भ्रमता दिगंतराणि
क्वचिदास्वादितमीक्षितं श्रुतं वा।
वद सत्यमपास्य पक्षपातं
यदि जातीकुसुमानुकारी पुष्पम्॥

अत्र हि भ्रमरपुष्पशब्दौ संबोधनाद्यनुपपत्त्या बाधितमुख्यार्था
वभिधेयसादृश्यात्तद्गतगुणसदृशगुणयुक्तमर्थान्तरं लक्षण
Fol. 24 यावगमयतः Fol. 24 प्रयोजनं चात्र भ्रमरत्वपुष्पत्वैकार्थसमवेतक्रिया
गुणसदृशानामसंविज्ञानपदानां क्रियागुणानां प्रतिपादनं
समवायतो लक्षणा छत्रिणो यान्तीति॥ अत्र बहुवचनप्रयोगान्मु
ख्यशब्दार्थ पदार्थबाधः॥ न ह्येकस्मिन् छत्रिणि बहुवचनस्य
प्रयोगानुपद्यते॥ अतोऽत्र गमनलक्षणायां क्रियायां छत्रिणा सह
योऽसौ छत्रशून्यानां समवायः साहचर्यं तद्वशाच्छत्रीशब्देन
छत्रशून्या अपि लक्षणयावगम्यते। प्रयोजनं चात्र छत्रशून्या
नां सर्वात्मना छत्रोपेतस्यास्यनुतयाथिता प्रतिपादनं॥ वैपरी
त्याल्लक्षणा भद्रमुखेति॥ अत्र हि भद्रमुखशब्दस्याभद्रमु
खे प्रयोगान्मुख्यार्थलाभः॥ अतोऽसौ स्ववाच्यभूतभद्रमुखत्वविपरी
तत्वादभद्रमुखत्वं विपरीतनिबंधनतया लक्षणया प्रत्याययति
अत्र च लक्षणाप्रयोजनं गुप्ताऽसत्यार्थप्रतिपत्तिः॥ गुप्तो ह्यस
त्यार्थस्तत्तदभिप्रायवशेन प्रायेण प्रयोक्तृभिः प्रतिपद्यते॥ क्रि-
यायोगाल्लक्षणाया मुदाहरणं॥ महति समरे शत्रुघ्नस्त्वमिति॥
अत्र शत्रुघ्नशब्दप्रयोगान्मुख्यशब्दार्थबाधः॥ शत्रुघ्नशब्द
श्चाशत्रुघ्ने शत्रुहननक्रियाकर्तृत्वयोगात् लक्षणया प्रयुक्तः॥
प्रयोजनं चात्र शत्रुघ्नशब्दाभिधेयनृपालीरूपता प्रतिपादनं॥
तथा च॥ पृथुरसि गुणैः मूर्त्या रामो नलो भरतो भवान्।
महति समरे शत्रुघ्नस्त्वं तथा जनकः स्थितेः॥
इत्युपक्रम्य इति सुचरितैः ख्यातिं बिभ्रच्चिरंतनभूभृतां
कथमिति न मांधाता देव त्रिलोकविजय्यपि इति। शत्रुरूपतया

Fol. 25 नृपतित्वमुपश्लोक्यमानस्य राज्ञो वर्णितं॥ तदेवं निबन्धनत्रय समुद्भवता लक्षणा वृत्तस्योक्ता॥ इदानीं पंचविधं संबंधनिबंधनायामासत्तो पूर्वोपवर्णितायां क्वाचिद्वाच्यस्याति तिरस्कारः॥ क्वाचिद्विवक्षितत्वं क्वाचिच्चाविवक्षितत्वमित्येवं विधं त्रयं यत्सुहृदयैरुपदर्शितं॥ तस्य विषयविभागमुपदर्शयितुमाह

सादृश्ये वैपरीत्ये च वाच्यस्याति तिरस्क्रिया।
विवक्षा वाविवक्षा च संबंधसमवाययोः॥
उपादाने विवक्षात्र लक्षणे त्वविवक्षणं॥
तिरस्क्रियाः क्रियायोगात्क्वाचित्ताद्विपरीतता॥

अभिधेयेन संबन्धादित्यत्र यदा सत्त्वपञ्चकमुक्तं तत्र सादृश्ये वैपरीत्ये च वाच्यस्यात्यंतं तिरस्कारः॥ तथा हि सादृश्ये निबंधनायां लक्षणायामुपमानवाचिनः पदस्योपमेयपरत्वादुपमानात्मकं वाच्यमत्यन्तं तिरस्क्रियते॥ यथोपदर्शितं स्निग्धाश्यामलकांति लिप्तेति॥ पयोदसुहृदामिति॥ अत्र हि लिप्तसुहृच्छब्दयोः स्वार्थोपमितवस्तुपरत्वात्स्वार्थस्यात्यंतकार्यानान्वितत्वं॥ वैपरीत्य समाश्रयायामपि तस्यामर्थांतररूपावाच्य विपरीतस्योपादायत्वा वाच्यस्यात्यन्ततिरस्कारः॥ यथा भद्रमुखेति॥ अत्र हि भद्रमुखत्वमभद्रमुखपरत्वादत्यन्तं तिरस्कृतं॥ एवं सादृश्यवैपरीत्ययोरत्यन्तं तिरस्कृतवाच्यता। सम्बंधसमवाययोस्तु वाच्यस्य विवक्षितत्वाविवक्षितत्वेन नत्वत्यंतं तिरस्कारः॥ तत्र ह्युपादानात्मिकायां लक्षणायामुपादाने वाच्यविवक्षायां वाच्यस्य विव-
Fol. 26 क्षितत्वम्॥ तथा हि तत्र विवक्षितान्यपरवाच्यता सहृदार्थैः काव्यवर्त्मनि निरूपिता॥ लक्षणे तु वाच्यस्याविवक्षार्थांतरसंक्रांतत्वात् तत्र संबंधनिबन्धनायां लक्षणायामुपादाने वाच्यविवक्षायामुदाहरणम्॥ पीनो देवदत्तो दिवा न भुंक्त इति अत्र हि दिनाधिकरणभोजनाभावविशिष्टतया पीनत्वलक्षणं कार्यं विवक्षितमेव सत्स्वसिध्यर्थत्वेन संबंधनिबन्धनया लक्षणया रात्रिभोजनात्मकं कारणमाक्षिपति॥ समवायनिबन्धनायां तस्यामुपादानवाच्यस्य विवक्षि-

Fol. 26 तत्वं॥ यथा छत्रेण यांतीति॥ अत्र हि यदा छत्री बहुत्वोपेतत्वात्स्व
गत बहुत्वान्वयसंसिद्ध्यर्थत्वेन छत्रशून्यान्याक्षिपति॥
तदा समवायनिबंधने छत्रशून्यानामुपादाने क्रियमाणे
वाच्य छत्री विवक्षितः॥ तदेवं संबंधसमवायनिबंधनायो
रुपादानात्मिकयोर्लक्षणयोः वाच्यस्य विवक्षितत्वमुक्तं॥
लक्षणात्मिकयोस्तु तयोर्थाद्यस्य विवक्षा न त्वत्यंतं तिरस्का
रः॥ लक्ष्यमाणद्वारेण कथंचित्कार्यान्वितत्वात्॥ तत्र संबंध
निबंधनायां लक्षणायामविवक्षितत्वेनुदाहरणम्॥ रामोस्मीति
अत्र हि रामशब्दस्य वाच्यस्य दाशरथिरूपं व्यंग्यधर्मांतर
परिणतत्वात्स्वपरत्वेनानुपात्तं तस्मादविवक्षितं॥ तत्रात्यंतं
तिरस्कृतं॥ व्यंग्यधर्मद्वारेण वाक्यार्थे कथंचिदन्वितत्वात्॥
एवं गंगायां घोष इत्यादावप्युन्नेयम्॥ समवायनिबंधनायां
तु लक्षणायामविवक्षितत्वाद्वाच्यता छात्रिणो यांतीत्यत्रो
वोदाहार्या॥ तथा हि यदा छात्रित्वं बहुत्वान्वयान्यथानुपपत्त्या
समुदायपरतयोपादीयते तदा समुदायस्य विवक्षितत्वाद्वाच्य
Fol. 27 स्याविवक्षा॥ एवमपि च समुदायांतरभूतत्वात्समुदायद्वारेण
छात्रिणोऽपि क्रियान्वयः सुलभ एव॥ अत एव चात्र वाच्य
स्य नात्यंततिरस्कारः॥ समुदायस्यांतर्भूतत्वेन क्रिया-
न्वितत्वात्तदेवं सत्वस्य समवायनिबंधनयोर्लक्षणयोर्थायस्य
विवक्षितत्वमविवक्षितत्वं च न त्वत्यन्ततिरस्कार इति स्थितं।
क्रियायोगे निबंधनायां तु लक्षणायां शब्दगताबधैव शक्त्य
नुसरणार्थ ब्दशक्तिमूलता लक्ष्यमाणस्यार्थस्य तत्र च वाच्य
स्यार्थस्य तिरस्क्रिया॥ यथा पुरुषः पुरुष इति॥ अत्र ह्येकेन
पुरुषशब्देन विशिष्टजातीयस्यार्थस्योपात्तत्वादपरः पुरुषशब्दः
स वाच्यतिरस्कारेणैव क्रियते॥ योगनिबंधनया लक्षणया
पूरयितृत्वमुपादत्ते॥ यत्र तु निमित्तसद्भावाद्वाच्येर्थे विवक्षित
एव॥ तस्यार्थान्तरे शब्दशक्त्यांतरमूलतया नास्थितस्याप्यावापः
क्रियते॥ तत्र तद्विपरीतता वाच्यार्थ तिरस्क्रिया वैपरीत्यात्र खलु

Fol. 27 तत्र वाच्यस्यार्थस्य तिरस्क्रिया॥ अपि तु विवक्षितत्वमेव॥
यथा महति संग्रामे समरे शत्रुघ्नस्त्वमिति॥ अत्राहितशत्रुघ्न-
शब्दः शत्रुहननक्रियाकर्तृत्वं क्रियायोगनिबंधनया लक्षणया
वगमयन्नपि स्वार्थं दाशरथिं दाशरथिमुपमानतया प्रतिपादयति
तेन तस्य विवक्षितस्वार्थतापि यद्यपि चोपमेयपरत्वेनोपमान
स्योपादानादेवं विधे विषये अत्यन्ततिरस्कृतवाच्यता सहृदयैरंगी
क्रियते॥ तथापि क्रियायोगनिबंधलक्षणेवसरे तावद्वाच्यस्य
तस्योपमानत्वेनांगीकृतत्वादतिरस्कृतवाच्यतापि भवति॥ तदेव
क्रियायोगनिबंधनायां लक्षणायां क्वचिद्वाच्यं तिरस्क्रियते
Fol 28 क्वचिद्विवक्षित इति स्थितं॥ एतच्च सर्वं बहुवक्तव्यत्वादिह
नाति निरूप्यते॥ लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयै
र्नूतनतयोपवर्णितस्य विद्यते इति दशमुन्मीलयितुमिदमत्रोक्तम्॥
एतच्च विद्वद्भिः कुशाग्रीयया बुद्ध्या निरूपणीयं॥ न तु वाणि
त्येवास्तायितव्यं इत्यलमतिप्रसंगेन॥ तदेवं वाच्यस्य तिरस्कार
विवक्षा विवक्षाणां विषयविभागो निरूपितः॥ इदानीं सकलशब्द
विभागात्मकस्य शब्दतत्वस्य यदा शब्दार्थसंबंधत्रितयरूप
तया रज्जुसर्पवद्विवर्तमानत्वं तदैवेतदभिधावृत्तं दशविधं
व्यवहारोपारोहितां प्रतिपद्यते॥ न तु संहृतक्रमवाक्तत्वविषये
इति दर्शयितुमाह॥

विवर्तमानं वाक्तत्वं दशाविधं विलोक्यते।
संहृतक्रमाभावे तस्मैस्तेषां कुतो गतिः॥

सकलशब्दविभागात्मनः शब्दतत्वस्य प्रमातृप्रमाणप्रमेयप्रमाति
रूपेण प्रकारचतुष्टयेन प्रत्येकं वाचवाच्यकतत्संबंधप्रपंच
भाज्ये रज्जुसर्पवद्विवृतस्यानन्तरनिरूप्यत्वेवं[illegible]विधदश
विधावृत्तसमन्वितत्वं॥ प्रभ्यस्तमितसकलविकल्पोल्लेखोपप्लुव
त्वात्॥ क्रमभेदसंहारेण तस्मिन् वाकत्वेऽविवर्तमाने तेषा
माभिधावृत्तानां दशानां कुतो गतिः नैव प्रस्तर इत्यर्थः॥ इदानीं
प्रकरणार्थमुपसंहरति॥ इत्येतदभिधावृत्तं दशाध्यात्र विवेचितम्॥

Fol. 28 मुख्यस्याभिधावृत्तस्य प्रकारैश्चत्वारो लाक्षणिकस्य तु षडित्येवं दशप्रकारमभिधावृत्तं विवेचितम्॥ अधुना फल मेतस्योपदिश्यते॥

Fol. 29 पदवाक्यप्रमाणेषु तदेतत्<sup></sup>प्रतिबिंबितम्।
या योजयति साहित्ये तस्य वाणी प्रसीदति॥

प्रदावगतिहेतुत्वात्पदं व्याकरणं॥ वाक्यसमन्वयावसाय हेतुत्वाद्वाक्यं॥ मीमांसाप्रमाणप्रतिपत्तिकारित्वात्प्रमाणं तर्कः

एतेषु पदवाक्यप्रमाणशास्त्रेषु चतुर्वर्गेपि योगि सर्वविद्याधिगमोपायभूतेषु त्रिषु प्रविभज्यमानेषु संक्रांतानंतर निरूपित स्वरूपं प्रतिबिंबशालेधमभिधावृत्तं यस्साहित्ये सकललोक व्यवहारदर्पण प्रारब्ध प्ररव्ये सं-- संचारयति॥ स वाचिक्रमेण प्रसीदंत्या वागीश्वरो भवति॥ दशविधेनानेनाभिधावृत्तेन समग्रस्य वाक्परिस्पंदस्य व्याप्तत्वादनेन व्याकरणमीमांसा-तर्कसाहित्यात्मकेषु चतुर्षु शास्त्रेषूपयोगात्॥ तद्द्वारेण च सर्वासु विद्यासु सकलव्यवहारमूलभूतासु प्रसारणादस्य दशविधस्याभिधावृत्तस्य सकलव्यवहारोपकारित्वमाख्यातम्॥

भट्ट कल्लटपुत्रेण मुकुलेन निरूपिता॥
सूरिप्रबोधनायेयमभिधावृत्त मातृका॥

ग्रंथाग्रं॥ ४१०॥

भटकल्लटात्मज मुकुल विरचिता अभिधावृत्तिमातृका समाप्तेति॥ शुभमस्तु॥ सं. १९३० माघ सुदि १०॥

लि: नवल

